तिरुमलतिरुपतिदेवस्थानम्

# बालसप्तगिरिः

## सप्तगिरि अनुबंधम्



सम्पुटिः-०१ सञ्चिका-३

## मे -२०२०

## विषयसूचिका



मुखचित्रम् – प्रह्लादवरद नरसिंह

अन्तिमरक्षापुटः – सीताशोकनिवारण हनुमंत

# कूर्मावतारः

- श्रावणीरेड्डि



भगवतः प्रमुखदशावतारेषु मत्स्यावतारः प्रथमः मन्यते। द्वितीयस्तु कूर्मावतारः इति। कूर्मस्यापरं नाम कच्छपः इति। कूर्मावतारे भगवान् विष्णुः क्षीरसमुद्रस्य मन्थन काले मन्धरपर्वतं स्वकवचे अधरत्।एवं भगवता विष्णुना मन्धरपर्वतसाहाय्येन तथा वासुकी सर्पसाहाय्येन देवासुरमन्थनद्वारा चतुर्दशरत्नानि प्राप्तानि।

## कूर्मावतार कथा -

देवराज इन्द्रस्य शौर्यमवलोक्य ऋषि दुर्वासः तस्मै पारिजातपुष्पमालां समर्पयत्! किन्तु देवराजेन्द्रः मालामगृहीत्वा ऐरावतायायच्छत्। ऐरावतोऽपि तां भूमौ अक्षिपत्। एतदृष्ट्वा क्रोधान्वितेन दुर्वासार्षिणा देवताः शापिताः। तस्मात् देवताः स्वशक्तिवञ्चिताः अभवन्। अस्मात् निराशाः भूत्वा सर्वे ब्रह्मणः सकाशं अगच्छन्। ब्रह्मा ताः विष्णुं सम्पर्कयितुम् अकथयत्। विष्णुना ताः आदिष्टाः यत् ताः क्षीरसमु

द्रमन्थनं कुर्युः यस्मात् अमृतं निगरिष्यति तथा अमृतपानानन्तरं स्वशां पुनः प्राप्स्यन्ति। कठिनं कार्यमिदं वासुकी मन्धरपर्वत साहाय्येनैव भवितुं शक्यते। यत्र मन्धरपर्वतं दण्डवत् तथा वासुकिं रज्जुवत् प्रयोक्तुं शक्यते। परन्तु एतस्मै कार्याय असुराणामपि साहाय्यमावश्यकम् आसीत् यस्मात् देवातः आतङ्किताः सञ्जाताः विष्णुना असुराः बोधिताः, असुरैरपि अमृतलोभेन कार्याय अस्मै अङ्गीकृतम्। सर्वेऽपि मिलित्वा समुद्रमन्थनं प्रारब्धम्। एकस्मिन् पार्श्वे असुराः अन्यस्मिन् पार्श्वे देवताः वासुकीमधरन्। अस्य मन्थनकारणात् वासुकीमुखात् गरलं निष्कासयितुं प्रारब्धं यत् समग्रविश्वाय सङ्कटस्वरुपमभवत्। तदैव भगवान् शङ्करः सङ्कटमोचकत्वेन समागत्य गरलसेवनमकरोत्। तथा स्वकण्ठे तदस्थापयत्, यस्मात् सम्पूर्णकण्ठः नीलवर्णीयः सञ्जातः। अत एव तस्य नाम नीलकण्ठः अभवत्। मन्थनकार्यं चलदेवासीत् किन्तु शनैः शनैः मन्धरपर्वतः समुद्रान्तः गन्तुं प्रारब्धः। तदैव भगवान् विष्णुः कूर्मावतारत्वेन अवतीर्य स्वपृष्टे पर्वतं सव्यकरोत् तस्य कूर्मस्य पृष्टभागस्य व्यासः १००,००० योजनपरिमितमांसीत्। पुनरपि मन्थनं प्रारब्धम्। अस्मात् मन्थनात् कामधेनुः लक्ष्मीः चेत्यादिनामाविर्भावः सञ्जातः। अन्तिमे धन्वन्तरिः स्वहस्तेन अमृतकलशं स्वीकृत्य प्रकटितः। एवमेव कूर्मावतारं धृत्वा भगवान् विष्णुः सृष्टितत्वं समरक्षयत्। कूर्मभगवतः पूजार्थम् आन्ध्रप्रदेशस्य चित्तूरुजिल्लायां कुरुमाय इत्यत्र कूर्ममन्दिरं विद्यते। तथैव श्रीकूर्मक्षेत्रे कूर्मनारायणः संलसन् अस्मान् अनुगृह्णाति।



द्वादश सूरयः

# पेयाल्वारः

- का.इ.वरददेशिक

विशिष्टाद्वैतसिद्धान्ते प्रसिद्धाः द्वादश आल्वाराचार्याः वर्तन्ते। एते सन्तः अस्य सिद्धान्तस्य आधारभूताः। श्रुतिप्रतिपाद्यः जगत्कर्ता श्रीमन्नारायण एव इति अस्य सिद्धान्तस्य अभिप्रायः।



श्रुतेः आशयस्यावगमनं क्लिष्टकरं तथैव बाहुल्येन दुष्करमपि। अतः साधारणपौरजनः विमुखः पथभ्रष्टश्च माभूदिति कृत्वा एते सन्तः भक्तिमार्गम् उपदिष्टवन्तः। अनेन मार्गेण भगवतः श्रीमन्नारायणस्य परत्वं भगवदवताराणां प्रामाण्यं भगवदर्चामूर्तीणां दिव्यानुभवं मोक्षप्राप्तिरित्यादि विषयान् च उपदिष्टवन्तः। एते विषयाः लोकोक्तिरूपेण गीतरूपेण च उपनिबद्धम् वर्तन्ते। प्रत्येकं गीतं ''पासुरम्'' इति कथ्यते। एतेषां सङ्ग्रहः ''द्राविडप्रबन्धाः'' इति नाम्ना प्रसिद्धः। आहत्य चतुस्सहस्रसङ्ख्याकाः एते प्रबन्धाः।वस्तुतः ''तमिल्वेदः'' इत्येव अङ्गीकृतो वर्तते। विशिष्टाद्वैतसिद्धान्तस्य स्थापने संस्कृतवेदस्य यथा प्रामुख्यं वर्तते तथैव द्राविडवेदस्यापि अस्ति वैशिष्ट्यम्। एतादृशस्य प्रबन्धस्य कर्तृषु अन्यतम एव पेयाल्वारः।




**परिचयः -** अस्माकं सम्प्रदाये मुदुलाल्वार इति त्रिमुनयः पोय्गै आल्वारः भूतत्ताल्वारः पेयाल्वारः चेति विख्याताः। एते महापुरुषाः अयोनिजाः। नाम येन केनापि पुरुषसम्बन्धेन विना ते जनिमलभन्त। पेयाल्वारस्य जन्मः मयूरपुरीदिव्यक्षेत्रे आदिकेशवभगवत्सन्निधौ कैरवसरोवरे आश्वयुजमासस्य शतभिषङ्नक्षत्रे अभवत्। कैरवमुनिः इत्यपरो नामधेयः। अयं महाविष्णोः नन्दकस्य अवतारः इति प्रख्यातः। द्राविडभाषायां पेय् नाम कश्चन चित्तविकारविशेषः। भगवतः श्रीमन्नारायणस्य अनन्तकल्याणगुणस्य अविरततया चिन्तनमेव अस्य नामधेयस्य कारणमिति स्वयमेव स्वस्य प्रबन्धे वक्ति। (पेयनाय् ओयिन्देन एम्बिरानुक्के)

**भगवत्साक्षात्कारः** - तमिल्नाडुप्रान्ते तिरुकोय्लूरु इति प्रसिद्धः श्रीवैष्णवक्षेत्रः। अस्य अपरं नाम गोपपुरी इति। अत्र त्रिविक्रमः देहलीशश्चेति भगवतः नामानि।

एकवारं त्रयः मनुयः भगवन्नाम गायन्तः स्मरन्तश्च भ्रमणं कुर्वन्तः आसन् । गोपपुरीं प्राप्य मृगण्डुमुनेः आश्रमं प्राप्तवन्तः। समयः अर्धरात्रिः। झटिति अतिवृष्टिः जाता। आच्छादनार्थं कुत्रापि गन्तव्यं इति विचिन्त्य तत्रैव रिक्तं देहलीं दृष्ट्वा एते अगच्छन्। 'देहली' नाम गृहस्य द्वारमनन्तरं कश्चन संकुचितः प्रवेशप्रदेशः। तत्र यावानेकः शेतुं शक्नोति द्वौ उपवेष्टुं त्रयः स्थातुं च शक्नुवन्ति तावानेव अवकाशः आसीत्।

झटिति तिष्ठतः मुनीन् कोपि चतुर्थः पुरुषः आगत्य सङ्कोचं करोति इति भावः तेषां मनसि आगच्छत्। तत्क्षणे एव वक्षस्थले जाज्वल्यमानां हिरण्यवर्णां हरिणीं वीक्ष्य पेयाल्वारः साक्षात् तिष्ठन्तं भगवन्तं प्रणिपत्य'' तिरुकंडेन् पोन्मेनिकंडेन्'' इत्याराभ्य शतानि गीतानि स्तौति। अस्य प्रबन्धस्य नाम ''मूँड्राम् तिरुवंदादि'' इति। अत एव देहलीश इति नामधेयः प्राप्तः भगवता।

**श्रीसूक्तिः** - मूँड्राम् तिरुवंदादिः।

**मङ्गलाशासनक्षेत्राणि**- अनेकाः। विशिष्य अष्टादशगीतानि वृषगिरिपतेरुपरि उपनिबद्धानि। वक्ता श्रोता वचन विषयः प्रीयतां वेङ्कटेशः।










# कर्णाटक हरिदासाः सारस्वतं च

- एस्. अभिक्या

हे बालाः! "कृष्णा नीबेगने बारो" इत्यादि कीर्तनानि संगीतगोष्ठीषु भरतनाट्यप्रदर्शनेषु च सर्वदा श्रुण्वन्ति खलु। तर्हि तेषां कीर्तनानां प्रणेतारः गायकाश्च के इत्युक्ते - ते एव भवन्ति श्रीव्यासरायाः। ते कीर्तनालापनसमये श्रीकृष्णः बालोभूत्वा नाट्यं अकरोत् इति जनाः कथयन्ति स्म। व्यासरायमुनयः श्रीमन्मध्वाचार्यग्रन्थानां प्रचारप्रसारणं च कृत्वा, जनेषु धार्मिकप्रवृत्तिं, ज्ञानभक्तिवैराग्यं च उत्पादितवन्तः इत्यतः एते श्रीमन्मध्वमतोद्धारकाः इति श्रीपुरन्दरदासानां अभिप्रायः।

चन्द्रिकाग्रन्थस्य रचनां कृत्वा चन्द्रिकाचार्यरूपेण सुप्रसिद्धाः। एवमेव तर्कताण्डवम्, न्यायामृतम् इत्यादि उद्ग्रन्थान् च अलिखन्। एतैः प्रणीताः ग्रन्थाः विदुषां पाठ्यग्रन्थाः सञ्जाताः। एते अपि श्रीपादराजपथम् अनुसृत्य पूजा समये भागवते वर्णितानां श्रीकृष्णलीलानां सुश्राव्यकण्ठेन आलापनं कृत्वा श्रीपुरन्दरादिदासेभ्यः गुरुः अभवन्। श्रीव्यासरायाः ब्रह्मण्यतीर्थानां शिष्यः, तेषां मातापितरौ लक्ष्मीदेवीरामाचार्यौ आस्ताम्। बाल्ये ब्रह्मण्यतीर्थानां निकटे तत्पश्चात् श्रीपादरायानां सनीडे सम्पूर्णद्वैतवेदान्तस्य ज्ञानं प्राप्तं श्रीव्यासराजेन।

कर्णाटकदेशे गङ्गावतीजनपदस्थ आनेगुन्दिग्रामसमीपे तुङ्गभद्रानदीमध्ये नववृन्दावनानि विलसन्ति। तेषु महामहिमान्वितानां अमीषां वृन्दावनं मध्यमं वृन्दावनम्। तत्दर्शनेन भक्तिभावादिकम् आह्लादकं च जनयति। चन्द्रिकाचार्याभिधेयत्वेन प्रसिद्धाः श्रीव्यासरायाः श्रीपुरन्दरकनकदासानां प्रत्यक्षगुरवः। परोपकारायैव स्वस्य महिमानाम् उपयोगं कृतम् एतैः। साम्प्रतं तमिलनाडु-आन्ध्रा कर्णाटकादि राज्येषु सप्तशताधिक हनुमभीममध्वावतारचिह्नानां विद्यमानशिलामूर्तीनां स्थापनं कृतम्। व्यासरायप्रतिष्ठाकारणेन हम्पीप्रदेशे विद्यमानस्य "यन्त्रोर्धारक

**आञ्जनेयस्वामिनः''** नित्यपूजादिकं प्रचलति। एवमेव यदा चन्द्रगिरेः, राजा शालुवनरसिंहरायः ब्रह्महत्यापापेन घटिताः तदा श्रीपादरायेन तद्दोषनिवारणं कृतं, तत्पश्चात् शालुवनरसिंहराजेन तिरुमलस्थ श्रीनिवासस्य पूजां कर्तुं प्रार्थिताः इति श्रीपादरायाः श्रीव्यासरायम् आदिष्टवन्तः। अतः गुरोः आज्ञानुसारं श्रीव्यासरायाः द्वादशवर्षाणि यावत् प्रतिदिनं स्वयमेव शास्त्रोक्तरीत्या श्रीनिवासस्य अर्चनां कृत्वा तदनन्तरं तत्र आगतानां अर्चकानां कृते पूजादिकार्याणि अनुवर्तनं कर्तुं सूचितवन्तः।

एवमेव विजयनगरभूपतेः श्रीकृष्णदेवरायस्य कृते **''कुहयोगाख्य''** प्राणान्तकयोगः सम्भवति इति स्वदिव्यदृष्ट्या ज्ञात्वा व्यासरायाः **''नाविष्णुः पृथिवीपतिः''** इति वचनानुसारं, तत्रापि धार्मिकप्रभोः रक्षणमेव धर्मः इति मत्वा श्रीकृष्णदेवरायस्य समीपं गत्वा सिंहासनसहितसम्पूर्णराज्यं दानत्वेन स्वीकृतवन्तः। **''कुहदोष''** समापनानन्तरं पुनः सम्पूर्णराज्यं श्रीकृष्णदेवरायाय प्रत्यर्पितवन्तः। एतादृशानां महात्यागिनां वैराग्यसम्पन्नानां च कृते महार्घाणि वस्तूनि दत्वा सम्माननम् अकरोत्। तानि सम्मानितवस्तूनि अद्यापि मठे द्रष्टुं शक्नुमः। श्रीव्यासमायाः स्वजीवनं सर्वं धर्मप्रचाराय, धार्मिकप्रवृत्तिवर्धनाय, भक्तिज्ञानवैराग्यादि भावान् प्रबोधनाय च समर्पितवन्तः। भगवतः लीलागुणान् धर्मान् च कन्नडभाषायां सरलया शैल्या व्यरचयन्।

ज्ञात्वा अज्ञात्वा वा कृतानि जारत्व, चोरत्व, क्रूरत्वादि महापापानि श्रीकृष्णचरणकमलतले प्रायश्चित्तबुद्धा प्रार्थनेनैव परिहृतानि भवन्तीति तत्रापि अस्मिन् कलियुगे तपयज्ञयागाद्यपेक्षया प्रायश्चित्तबुद्धा कृता प्रार्थना एव अधिकं फलं ददाति इति तेषां वचः परं असकृत् दोषाः न करणीयाः। **''जारत्ववन्नु माडिद पापगलेल्ल''** इत्यस्मिन् गीते उक्तं यत् -जारत्वपापानां - हे गोपीजनजार इति, चोरत्वपापानां - हे नवनीतचोर इति, क्रूरत्वपापानां - हे कंसमर्दन इति, एवं दैनन्दिनजीवने क्रियमाणानां लघुपापानां कृते - पतितपावन इति प्रार्थनेनैव श्रीकृष्णः रक्षां करोतीति तं ''सिरिकृष्णः'' इति व्यासरायाः कथयन्ति। अतैव तेषाम् अङ्कितनाम भवति **''सिरिकृष्ण''** इति।







चित्रकथा

# अभिषेकार्थमाकाशगङ्गा


तेलुगु मूलम् - श्रीनिवासादीक्षितुलु

संस्कृतानुवादः-या.उमामहेश्वररावः

चित्रम्- के. द्वारकानाथ्




1 यामुनाचार्याणाम् आदेशानुसारं सभक्तिश्रद्धं श्रीवेङ्कटेश्वरस्य अभिषेकार्थं नित्यं दिव्यजलं पापविनाशनतीर्थतः आनयति श्रीशैलपूर्णः एकस्मिन् दिने एकः व्याधः तस्य पुरतः गच्छन्....

स्वामिन्! जलं ददातु।पिपासा वर्तते।

एतत् श्रीशानाम् अभिषेकार्थं उपयुज्यमानं दिव्यतीर्थजलम्। तुभ्यं न दातव्यम्।



शरीरं कम्पते। स्वामिन्! किञ्चिद्दयां प्रदर्शयतु।

अहं तुभ्यं जलं न ददामि नाम सुतरां न ददामि... गच्छ....

2



कोपेन श्रीशैलपूर्णः चलति। तस्य पृष्ठतः एव चलन् तस्य शिरसः उपरि विद्यमानस्य तद्घटस्य बाणेन रन्ध्रं कृतवान् व्याधः। ततः स्रवत् जलं पिबन्तं व्याधं भर्त्सयति। सः श्रीशैलपूर्णः।

पापात्मन्! वेङ्कटेश्वरस्य अभिषेकाय इदं जलं, तत् नाशितवान् । सर्वं अधः पतितम्।

स्वामिन्! नष्टं चेत् नष्टं नाम। भवतस्तु वयः अधिकम्। एतत्कार्यं कर्तुं कष्टं करोति । एतस्य उपायं वदामि वा?

3




आम्... शीघ्रं वद
तत्र एकं दिव्यतीर्थम् अस्ति। चल... दर्शयामि।
4
6
हा..हा तथैव नमामि नाम। भवान् कः


उभौ मिलित्वा तत्प्रदेशं गत्वा पश्यतः। तत्र तीर्थं नास्ति। झटित्येव व्याधः बाणेन तत्पर्वतस्य रन्ध्रं स्थापयति। ततः स्वच्छा जलधारा स्रवति।
स्वामिन्! इयम् आकाशगङ्गा जलम् अमृतमित्येव चिन्तयतु। प्रतिदिनम् आगत्य एतज्जलम् अभिषेकार्थं नयतु...
5


स्वामिन्! किं तथा पश्यति मन्मुखे किं क्रीडन्ति कान्यपि?
7
त्वं.... व्याधो वा? नो चेत् ..... मम स्वामी वा?


8
सम्यक् पश्य? सत्यं त्वमेव ज्ञास्यसि।
तत्सत्यं जानामि भोः त्वं व्याधः न! त्वं मम स्वामी एव!


9
तावत्पर्यन्तं सविलासं हसन् स्थितः व्याधः क्षणे एव श्रीवेङ्कटेश्वरवत् परिवर्त्य अविरभूत्। श्रीशैलपूर्णस्य हस्ते भग्नघटः गतः। नूतनघटश्च आगतः।
श्रीनिवास! तव लीलामृतम् अद्भुतम् .... परमाद्भुतम्। मां तव करुणया पावनीकर्तुम् आगतवान् वा?


शीघ्रमेव नूतनघटे आकाशगङ्गाजलं स्वीकृत्य आनन्दनिलयं गतवान् श्रीशैलपूर्णः। अर्चकं स्वामी आवाहयति...
10
इतः आकाशगङ्गाजलमेव मम अभिषेकार्थम् उपयुज्यताम्
गोविन्द! गोविन्द!







कालक्रमे एषः श्रीशैलपूर्णः तिरुमलनम्बित्वेन प्रसिद्धः जातः। एषः श्रीरामानुजाचार्याणां मातुलः। अधनुाऽपि एतं भागवतोत्तमं संस्मरन्तः तिरुमलायाम् अध्ययनोत्सवस्य अन्ते ''तन्नीरमुदु उत्सवम्'' इत्यस्य सञ्छालनं सम्प्रदायः जातः।

अग्रिमसञ्चिकायां... स्वामिपुष्करिण्यां स्नानानन्तरं धर्मगुप्तस्य उन्मत्तता कथं नष्टमिति पठित्वा पूताः भवेम।

स्वस्ति!!!





# बाल्येज्ञानमर्जनीयम्

- रा.विष्णुचित्तः

**समुद्रेशान्तकल्लोले स्नातुमिच्छति मूढ धीः।**
**तथैव शान्ते संसारे ज्ञानमिच्छति दुर्मतिः।।**

सृष्टौ ८४ लक्ष परिमितं जीवराशयः सन्ति। एतेषां मध्ये मानव जन्म एव अतीव दुर्लभं अस्ति। ज्ञानम् एव मानवेभ्यः श्रेष्ठत्वं ददाति। केचन ''अहं बाल्यकाले अस्मि, अतः अहं अनन्तरं ज्ञानार्जनं करोमि'' इति चिन्तयन्ति। तत् तथा न कर्तव्यम्।बाल्यकाले एव पठनीयम्। एतां कथां पठित्वा भवन्तः एव ज्ञास्यन्ति।

एकस्यकृते चर्मव्याधिः आगता। अल्लोपति, होमियोपति इत्यादि वैद्यानां प्रति गतवान्। सः औषधं अपि स्वीकृतवान्। परन्तु ते सम्यक् प्रयोगं न कृतवन्तः। अनन्तरं सः आयुर्वेद वैद्यस्य समीपं गतवान्।

सः आयुर्वेद औषधं अपि स्वीकृतवान्। किन्तु तस्य प्रयोजनं नास्ति। तदा सः वैद्यः उक्तवान् ''अयं रोगः एवं न गच्छति'' इति। ''भवान् अधुना एव समुद्रतीरं गत्वा तत्र स्नानं करोतु'' इति उक्तवान्।

सः रोगी तावत् पर्यन्तं समुद्रं एव न दृष्टवान्। किन्तु वैद्यस्य वचनंश्रुत्वा समुद्रं प्रति गतवान्। तत्र सः समुद्र तीरे उपविष्टवान्। प्रातः आरभ्य सायंकाल पर्यन्तं तत्रैव उपविष्टवान् । एकः आगत्य पृष्टवान् यत् ''भवान् कुतः आगतवान्? किमर्थं एवं उपविष्टवान्'' इति। अहं तिरुपति नगरात् अत्र आगतवान्। अत्र समुद्रे स्नानं कर्तुं आगतवान् इति रोगी उक्तवान्।

''आगतवान् खलु अधुना स्नानं करोतु'' इति सः उक्तवान्। तदा रोगी वदति ''एताः तरङ्गाः गमनानन्तरं अहं स्नानं करोमि'' इति। तदा सः हसितवान्। किमर्थं इत्युक्ते कदापि तरङ्गाः न गच्छन्ति। एतस्य बुद्धिं दृष्ट्वा सः हसितवान्।

एवं तरङ्गगमनान्तरं अहं स्नानं करोमि इति यः वदति सः मूढः। तरङ्गाः कदापि न शाम्यन्ति। एवं ''बाल्यकाले न पठामि अहं अनन्तरं पठामि'' इति यः वदति सः मूढः एव। तदर्थं बाल्यकाले एव पठनीयम्।

अतः एव अन्नमाचार्यः

''कदलुडिपि निरादगाढलचु वारलकु

कदलेनि मनसुनकु कढनु एक्कडिदिः

इति गीतवान्।





# विशिष्ट बालकः

नाम - इ.चक्रधर्

कक्ष्या - द्वितीय कक्ष्या

पितुः नाम - इ.वेंकटरमेष्, इंडियन् आर्मी

मातुः नाम - डि.श्रीदेवी, ति.ति.दे.,

पाठशाला - मेक् मै बेबि जीनियस्, तिरुपति

२२-०४-२०१७

- २१० वस्तु नामानि 78 secs

जीनियस् बुक् आफ् रिकार्डस्

वण्डर् बुक् आफ् रिकार्डस्

०५-०६-२०१७

१०० वेमनपद्यानि - २०० बालवालिकाः

०३-०६-२०१८

१०० वेमनपद्यानि - ३०० बालवालिकाः

वेमन शतकरत्नपुरस्कारः - यु.के.जि

गीता बाल पुरस्कारः (१२.१५ अद्यायौ) - यु.के.जि

क्षणिक गणिक पुरस्कारः - २० गणिकाः प्रथमकक्ष्या



# क्विज्

- एन्. उमादेवी

१. रामायणे कति काण्डाः सन्ति?

अ. सप्त
आ. चत्वारः
इ. षट्
ई. पञ्च

२. सीतापहरणम् रामायणे कस्मिन् काण्डे संघटितम्?

अ.अयोध्याकाण्डे
आ.अरण्यकाण्डे
इ. किष्किन्धाकाण्डे
ई.सुन्दरकाण्डे

३. कस्तावत् रामायणस्य दीर्घतमः काण्डः?

अ. अयोध्याकाण्डः
आ. सुन्दरकाण्डः
इ. युद्धकाण्डः
ई. उत्तरकाण्डः

४. रामायणस्य श्लोकसंख्या भवति?

अ. ४०,०००
आ. २५०००
इ. १५०००
ई. १००००

५. शतसाहस्रीसंहिता इति कस्य अपरं नाम?

अ. रामायणस्य
आ. भविष्यपुराणस्य
इ. स्कान्दपुराणस्य
ई. महाभारतस्य

६. संस्कृतदिवसोत्सवः कदा आचर्यते?

अ. माघपूर्णिमायाम्
आ. आश्वयुजपूर्णिमायाम्
इ. श्रावणपूर्णिमायाम्
ई. कार्तीकपूर्णिमायाम्

७.गुप्तगामिनी नदी का?

अ.गंङ्गा
आ.यमुना
इ. सरस्वती
ई. गोदावरी

**समाधानः**

१.अ २.आ ३.इ ४.आ ५.ई ६.इ ७.इ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव



